external agency, or out of their own accord) on the ... and where the rows of the nut-trees are bending under their fruitage.

(The ocean gradually vanishing the land rises ...

कुरुष्व तावत् करभोरु पश्चात् ।
मार्गे मृगप्रेक्षिणि दृष्टिपातम् ॥
एषा विदूरीभवतः समुद्रात् ।
सकानना निष्पततीव भूमिः ॥१८॥

Prose Order—करभोरु । मृगप्रेक्षिणि । पश्चात् मार्गे दृष्टि... कुरुष्व तावत् । विदूरीभवतः समुद्रात् एषा सकानना भूमिर्निष्पततीव ॥

मध्या—हे करभोरु करभो मणिवन्धात् कनिष्ठापर्य... प्रसारी करभागः । तद्वत् ऊरुर्जङ्घा यस्याः वहु० । तत्सम्बु... किञ्च मृगप्रेक्षिणि मृग इव प्रेक्षते तथाभूते । मृगवद् दर्श... शीले । पश्चान्मार्गेऽस्माभिरतीते प्रदेशे दृष्टिपातं दृष्टेः प्रस... कुरुष्व तावत् क्षणं विधेहि । किमस्ति तत्र द्रष्टव्यमित्येव... विदूरीभवतः क्रमात् दूरतां गच्छतः समुद्रात् एषा सका... काननेन वनेन सहिता भूमिः स्थली निष्पततीव निर्गच्छतीव

सञ्जीविनी—कुरुष्वेति । 'मणिवन्धादाकनिष्ठं करस्य कर... वहिः' इत्यमरः । करभः इव ऊरू यस्याः सा करभो... ऊरूत्तरपदादौपम्य इत्यूङ् । तस्याः सम्बुद्धिः, हे करभो... मृगवत् प्रेक्षते इति विग्रहः। हे मृगप्रेक्षिणि। तावत् पश्चात् म... लङ्घिताध्वनि, दृष्टिपातं कुरुष्व । एषा सकानना भू... विदूरीभवतः समुद्रात् निष्पतति निष्कामति इव । विदूरशब्द... विशेष्यनिघ्नात् चिन्हः ।

Literary Notes:—There is a juxtaposition ... figures here. उत्प्रेक्षा and स्वभावाख्यान or स्वभावो...

Literary Notes :—The stanza throws a flood of light on the skill of the artisan who constructed the aeroplane; the latter moves about in the direction drived to.

Grammatical Notes—सञ्चरते मल्लि० has 'समस्तृतीयायुक्तादिति संपूर्व्वाच्चरतेरात्मनेपदम् । The root चर् is used in परस्मैपद, but it is changed to आत्मनेपद; यथाविधः यथा विधा यस्य सः । बहु० । अभिलाषः =अभि +लष्+घञ् ।

Hindi Translation:—कहीं देवताओं के मार्ग से चलता है, कहीं बादलों के, कहीं पक्षियों के(मार्ग से)। जैसी २ मेरे मन की इच्छा है, विमान वैसी ही चेष्टा करता है, देखो ।

English Translation :—Now by the way of the gods, now of the clouds, and now by that of the birds. See that the aeroplane moves as I want it to move.

(The air of the mid-region wipes away the sweat-drops from your face).

असौ महेन्द्रद्विपदानगन्धिः ।
त्रिमार्गगावीचिविमर्दशीतः ॥
आकाशवायुर्दिनयौवनोत्थान्
आचामति स्वेदलवान् मुखे ते ॥२०

Prose Order :—महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः आकाशवायुस्ते मुखे दिनयौवनोत्थान् स्वेदलवानाचामति ॥

व्याख्या—महेन्द्रद्विपदानगन्धिर्महेन्द्रस्येन्द्रस्य द्विपो हस्त्यां दिक्करीति द्विपो हस्ती तस्य दानं मदजलं तस्य गन्धः सौरभ्यमस्यास्तीति । त्रिमार्गगावीचिविमर्दशीतस्त्रिमा

Hindi Translation—हे पहुँचे के समान सुडौल वाली ! तथा हे मृगतुल्य देखने वाली ! तनिक पीछे के मार्ग तो दृष्टिपात करो । यह दूर होते हुए समुद्र से, वनों समेत पृ उछलती सी आती है ॥

*English Translation ;—O of the thighs like* m*carpus! (करभ) (see Apte Sanskrit-English Dictionary, P. 380, column 2nd under the explanation of the word* करभ*) and of a deer-like glance! look you behind for a moment. This earth along with its forests looks emerging out of the ocean (gradually) getting farther and farther (from us).*

(The aerial car moves according to my wish).

**क्वचित् पथा सञ्चरते सुराणाम् ।**
**क्वचिद् घनानां पततां क्वचिच्च ॥**
**यथाविधो मे मनसोऽभिलाषः ।**
**प्रवर्त्तते पश्य तथा विमानम् ॥१६॥**

Prose Order—क्वचिद् सुराणां पथा सञ्चरते क्वचिद् घनानां क्वचिच्च पततां । यथाविधो मे मनसोऽभिलाषो विमानं तथा प्रवर्त्तते पश्य

**व्याख्या**—क्वचित् कुत्रचित् सुराणां देवानां पथा मार्गेण सञ्चरते क्वचिद् घनानां मेघानां क्वचिच्च पततां पक्षिणां पथा सञ्चरते । यथाविधो यादृशो मे मनसोऽभिलाषो मनोरथस्तथा विमानं प्रवर्त्तते चेष्टते इति पश्य विचारय ॥

सञ्जीविनी—क्वचिदिति । हे देवि ! विमानं पुष्पकं मे मनसः अभिलाषः यथाविधिः तथा प्रवर्त्तते पश्य । क्वचित् सुराणां पथा सञ्चरते क्वचित् घनानां क्वचित् पततां पक्षिणां च पथा सञ्चरते । समस्तृतीयायुक्तादिति सम्पूर्वाच्चरतेरात्मनेपदम् ।

Literary Notes:—The stanza throws a flood of light on the skill of the artisan who constructed the aeroplane; the latter moves about in the direction drived to.

Grammatical Notes—सञ्चरते मल्लि० has 'समस्तृतीयायुक्तादिति संपूर्वाच्चरतेरात्मनेपदम् । The root चर् is used in परस्मैपद, but it is changed to आत्मनेपद; यथाविधः यथा विधा यस्य सः । बहु० । अभिलाषः =अभि +लष्+घञ् ।

Hindi Translation:—कहीं देवताओं के मार्ग से चलता है, कहीं बादलों के, कहीं पक्षियों के(मार्ग से)। जैसी २ मेरे मन की इच्छा है, विमान वैसी ही चेष्टा करता है, देखो ।

English Translation :—Now by the way of the gods, now of the clouds, and now by that of the birds. See that the aeroplane moves as I want it to move.

(The air of the mid-region wipes away the sweat-drops from your face).

असौ महेन्द्रद्विपदानगन्धिः ।
त्रिमार्गगावीचिविमर्दशीतः ॥
आकाशवायुर्दिनयौवनोत्थान्
आचामति स्वेदलवान् मुखे ते ॥२०

Prose Order :—असौ महेन्द्रद्विपदानगन्धिः त्रिमार्गगावीचिविमर्दशीतः आकाशवायुः ते मुखे दिनयौवनोत्थान् स्वेदलवान् आचामति ।

व्याख्या—महेन्द्रद्विपदानगन्धिर्महेन्द्रस्येन्द्रस्य द्विपो हस्ती दिग्गजेति द्विपो हस्ती तस्य दानं मदजलं तस्य गन्धः सौरभ्यमस्यास्तीति । त्रिमार्गगावीचिविमर्दशीतो-

गच्छतीति त्रिमार्गगा गङ्गा तस्या वीचिभियों विमर्दः संघर्पस्तेनशीतो हिम आकाशवायुरन्तरिक्षस्थः पवनस्ते मुखे दिनयौवनोत्थान् दिनस्य यौवनान्मध्यन्दिनात् उत्तिष्ठतीति तान् स्वेदलवान् स्वेदस्य लवान् कणान् आचामति पिवति तान् शोपयतीत्यर्थः।

सञ्जीविनी—असाविति। महेन्द्रद्विपदानगन्धिः ऐरावत-मदगन्धिस्त्रिभिः मार्गैः गच्छतीति त्रिमार्गगा गङ्गा तद्धिता-र्थेत्यादिना उत्तरपदसमासः। तस्याः वीचीनां विमर्देन सम्पर्केण शीतः, असौ आकाशवायु, दिनयौवनोत्थान् मध्याह्नसम्भवान्, ते मुखे स्वेदलवान्, आचामति हरति। अनेन सुरपथसञ्चारो दर्शितः।

Hindi Translation:—इन्द्र के हाथी के मद-जल के गन्ध वाला, गङ्गा-तरङ्ग-सङ्ग से शीतल आकाश का वायु तेरे मुख पर से मध्याह्न कालिक पसीने की बूँदों को पीता है (सुखाता है।)

**English Translation** :—The air of the mid-region dries up the drops of the sweat on thy face—the air which has the fragrance of the rut of the elephant of Indra and had been rendered cool by a contact with the waves of the Ganges (lit. of triple-coursed).

(We are passing through the way of the lightening-clouds.)

... करेण वातायनलम्बितेन।
... चण्डि कुतूहलिन्या॥
... तीव मर ... द्वितीयम्।
... भिन्नविद्युद्वलयो घनस्ते॥२१॥

rose Order—हे चण्डि! कुतूहलिन्या त्वया वातायनलम्बिते-... स्पृष्ट ... विद्युद्व ... घनस्ते द्वितीयमाभरणमिव मुञ्चति॥

**मध्या**—हे चण्डि कोपने कुतूहलिन्या कुतूहलमस्या-स्तीति । कुतुकप्रेरितया त्वया वातायनलम्बितेन करेण वातायनं गवाक्षस्तस्मिन् लम्बितेनाश्रितेन करेण हस्तेन स्पृष्टोऽनुभूत उद्भिन्नविद्युद्वलयः उद्भिन्नो विद्युदेव वलयो येन सः प्रकटीकृतविद्युत्कटको घनस्ते तव द्वितीयमन्यदिवाभरणं भूषणमामुञ्चति धारयतीव । एकन्तु सुवर्णकटकं त्वया पिनद्धमेवास्ति द्वितीयञ्च विद्युद्वलयरूपं घनेन त्वद्भुजलतायां निपात्यते । अनेन च सीताया अग्निविद्युदाद्यदाह्यत्वध्वननद्वारा पवित्रत्वं व्यज्यते ॥

सञ्जीविनी—करेणेति। हे चण्डि कोपने । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । कुतूहलिन्या विनोदार्थिन्या, त्वया कर्त्र्या, वातायने गवाक्षे लम्बितेन अवस्रंसितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः, ते द्वितीयम् आभरणं वलयम्, आमुञ्चति इव अर्पयति इव । चण्डीत्यनेन कोपनशीलत्वाद् भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते ।

Grammatical Notes :—त्वया कर्त्र्या । The third class denotes the agency of Sita. वातायनं वातस्यायनं स्थानम्, the English word ventilation has at least some phonological correspondence with its Sanskrit equivalent.

Literary Notes :—मल्लिनाथ concludes his commentary on the present stanza with 'चण्डीत्यनेन कोपनशीलत्वाद् भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते' । He means to comment that the word चण्डि is here suggestive of the idea that the cloud, owing Sita's angree temperament slinks away from her instantaneously.

Hindi Translation:—हे कोपवति ! कुतूहल से तेरे खिड़की से लटके हुए हाथ से छुआ हुआ बादल बिजली के चमकने से चमका कर मानों तेरे हाथ में एक दूसरा कड़ा और डाल रहा है।

English Translation :—Dear one of an easily irritable temper! the cloud with a circle of the lightning flashing forth on your having touched it with your hand hanging out of the window (of the Puspaka), methinks, places a second bangle on your (hand).

(The ascetics here are re-occupying
their hermitages)

अमी जनस्थानमपोढविघ्नम् ।
मत्वा समारब्धनवोटजानि ॥
अध्यासते चीरभृतो यथास्वम् ।
चिरोज्झितान्याश्रममण्डलानि ॥२२॥

Prose Order—अमी चीरभृतो जनस्थानमपोढविघ्नं मत्वा चिरोज्झितानि समारब्धनवोटजानि यथास्वमाश्रममण्डलानि अध्यासते ।

**मध्या**—अमी एते चीरभृतश्चीराणि वल्कलानि बिभ्रति धारयन्तीति ! तपस्विन इत्यर्थः । जनस्थानं नाम वनमपोढविघ्न मपोढो विघ्नेभ्य इति । निर्विघ्नमित्यर्थः मया रक्षांसि हत्वा विघ्नरहितं कृतमित्यर्थः तथाभूतं मत्वा चिरोज्झितानि चिरायो पद्रवभीत्योज्झितानि परित्यक्तानि परं सम्प्रति पुनः समारब्ध नवोटजानि समारब्धा विरचिता नवा उटजा येषु कृताभिनवपर्ण-शालाकानीत्यर्थः ।यथास्वं स्वं स्वमनतिक्रम्येति यथास्वं स्वकीयं स्वकीयमेवेति भावः । आश्रममण्डलानि । आश्रमाणां मण्ड-लानि माला अध्यासतेऽधितिष्ठन्ति ।

सञ्जीविनी—अमी इति । अमी चीरभृतः तापसाः, जनस्थानम् अपोढविघ्नम् अस्तविघ्नं मत्वा, समारब्धाः नवा उटजाः पर्णशालाः येषु तानि । "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः । चिरोज्झितानि राक्षसभयात् इत्यर्थः, आश्रममण्डलानि आश्रमविभागान्, यथास्वं स्वम् अनतिक्रम्य अध्यासते अधितिष्ठन्ति ।

Literary Notes :—जनस्थानमित्यस्ति तपस्विजनैरधिष्ठितस्यारण्यविशेषस्य नाम । The word उटज is Masculine and पर्णशाला a Feminine. The चीरभृतः are the ascetics that wear bark of the trees.

Grammatical Notes :—अपोढविघ्नम् । विघ्न Masculine from वि+हन+कः । अपोढ from अप+वह्+क: । The compound is a बहु० । वहति ( लट् ), उवाह ( लिट् ), वोढा, वक्ष्यति (लृट्), वहतु, अवहत्, वहेत् उह्यात्, अवाक्षीत् ( लुङ् ) अवक्ष्यत् । समारब्ध=सम्+आ+रभ्+क । The Future tense is रप्स्यते । यथास्वं is Avyayi Bhāva compound· स्वमनतिक्रम्येति विग्रहे । अध्यासते is from आस् to sit with the preposition अधि. अधिशीङ्स्थासां कर्म । the शीङ्, स्था, and आस् governe the Accusative of the place.

Hindi Translation:—ये वल्कलधारी ( तपस्विजन ) जनस्थान को विघ्न-रहित किया जान कर बहुत काल के त्यागे हुए, आश्रमों में पुनः नवीन कुटियां डाल २ कर निवास करने लगे हैं ।

English Translation:—Here are these bark-wearing ascetics, who thinking them out of hindrances take back the possession of the long-quitted hermitages, according to their aloted (places), having begun well rebuilding and repairing them.

(That is the plot of ground where I found a foot-ornament of thee).

सैषा स्थली यत्र विचिन्वता त्वाम् ।
भ्रष्टं मया नूपुरमेकमुर्व्याम् ॥
अदृश्यत त्वच्चरणारविन्द—
विश्लेषदुःखादिव बद्धमौनम् ॥२३॥

Prose Order—सैषा स्थली यत्र त्वां विचिन्वता मयोर्व्यां भ्रष्टं त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् एकं नूपुरमदृश्यत ॥

**मध्या**—सा मया सम्यग् विचितैषा प्रत्यक्षीभूता स्थली अकृत्रिमा भूमिः। यत्र त्वां भवतीं विचिन्वतान्विष्यता मयोर्व्यां पृथिव्यां भ्रष्टं निपातितं त्वच्चरणारविन्दविश्लेषात् त्वच्चरण एवारविन्दं कमलं तस्माद् विश्लेषो वियोगस्तस्य तदेव वा दुःखं तस्मादेव हेतोर्हेतूत्प्रेक्षेयम्। बद्धमौनं बद्धं मौनं येन तत्। आश्रितमौनमित्यर्थः। एकं नूपुरं पदभूषणमदृश्यतावालोक्यत। अतः परं प्रियमिदं स्थानं ममेत्यर्थः।

सञ्जीविनी—सैषेति। सा पूर्वानुभूता स्थली एषा, दृश्यते। इत्यर्थः। यत्र स्थल्यां, त्वां विचिन्वता अन्विष्यता मया, त्वच्चरणारविन्देन यः विश्लेषः वियोगः तेन यत् दुःखं तस्मात् इव बद्धमौनं निःशब्दम्। उर्व्यां भ्रष्टम् एकं नूपुरं मञ्जीरः। मञ्जीरो नूपुरोऽस्त्रियाम् इत्यमरः। अदृश्यत दृष्टम्। हेतूत्प्रेक्षा।

Literary Notes :—**मल्लिनाथ** has given the synonym **पूर्वानुभूता** for सा, the first word of the stanza. The synonym means, literally, experienced before; likewise, he has paraphrased the

word पथा by दृश्यत इत्यर्थः ='is seen' etc. The नूपुरं or मञ्जीरः are both either Masculine or Feminine of gender. मञ्जीरो नूपुरोऽस्त्रियाम्। The figure used here is the हेतु or cause variety of the उत्प्रेक्षा because of the cause of the silence of the anklet having been conjectured here.

Grammatical Notes :—स्थली a natural plot of land, the arificial one grammatically being called स्थला। See पाणिनि's 'जानपदकुण्ड' etc. and भट्टोजि on the same aphorism. विचिन्वता = वि + चि + शतृ।

Hindi Translation—यह वही पृथ्वी है जहाँ तुझे ढूँढ़ते हुए मैंने पृथ्वी पर पड़ा हुआ, तेरे चरणकमलों के वियोग से मानों चुप लगाये हुए, एक बिछुआ देखा था।

English Translation :—This is the plot of land where I while on my search for you, got at an anklet (of you), observing silence as if out of its grief for a separation from your lotus-like foot.

(Here the creepers with quivering leaves pointed out to me the way by which you were abducted.)

त्वं रक्षसा भीरु यतोऽपनीता।
तं मार्गमेताः कृपया लता मे॥
अदर्शयन् वक्तुमशक्नुवन्त्यः।
शाखाभिरावर्जितपल्लवाभिः॥२४॥

Prose Order—हे भीरु त्वं रक्षसा यतोऽपनीता तं मार्गं वक्तुमशक्नुवन्त्य एता लता आवर्जितपल्लवाभिः शाखाभिर्मेऽदर्शयन्।

**मध्या**—हे भीरु स्त्रीस्वभावाद् भयशीले त्वं राक्षसेन रावणेन यतोऽपनीता अपहृता येन मार्गेण। तं वक्तुमशक्नुवन्त्यो जडत्वाद् इतो रावणस्सीतामपहृत्य इति व्यक्तवाचा प्रकटीकर्तुमसमर्थाः सहानुभूतिं द स्त्रीस्वभावात् कृपां कुर्वन्त्यश्च एता इमा लता आवर्जितपल्लव भिरासमन्तात्कम्पितपत्राभिः शाखाभिः करणैर्मे मम वा दर्शयन्।

सञ्जीविनी—त्वमिति। हे भीरु! भयशीले! ऊङुत इत्यू ततो नदीत्वात् सम्बुद्धौ ह्रस्वः। त्वं रक्षसा रावणेन, यत मार्गेण। सार्वविभक्तिकस्तसिः। अपनीता अपहृता, तं वागिन्द्रियाभावात् वक्तुम् अशक्नुवन्त्यः एताः नमिताः पल्लवाः पाणिस्थानीयाः याभिः ताभिः शाखाभि स्वावयवभूताभिः कृपया मे अदर्शयन् हस्तचेष्टया इत्यर्थः। "शाखा वृक्षान्तरे भुजे" इति विश्वः। लतादीनामपि ज्ञानमस्त्येव। तदुक्तं मनुना, "अन्तसंज्ञा भवन्त्येते सु समन्विता" इति॥

Literary Notes :—मल्लि० fills up the gap afte 'वक्तुमशक्नुवन्त्यः' by वागिन्द्रियाभावात् which mean 'owing to their not having been endowed w the organ of speech'. On पल्लव the same has very apt remark in पाणिस्थानीयाः। On अदर्शयन similarly, the same has चेष्टयाञ्च दर्शयन्नित्यर्थः='they beckoned as if to me' etc. The word शाखा means both a hand and also a branch of a tree.

The lexicon विश्व has 'शाखा वृक्षान्तरे भुजे'। says towards the close of his commentary tha

creepers etc. also have consciousness and cites मनु in support of his interpretation 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' = these (the plants etc.) have a latent consciousness of pleasures and pains. Dr. J. C. Bose a modern Botanist of international repute for original researches has amply borne out the truth of these observations of the ancients.

The stanza is a striking evidence of Kalidāsa's alive sense of co-relation between man and nature scattered around him To compare him with Wordsworth in this respect will not be, therefore, going too far.

Grammatical Notes:—मल्लिनाथ has hinted at various grammatical peculiarities of the stanza. भीरु is from भी+क्रुक् (रु)। Then to Feminise it ऊ is added भीरु+ऊ (ऊ) = भीरू। The Vocative singular is thence regularly formed. यतः तसि is the affix used undistinguishably after all the cases. This attempt is made in order that the doubt regarding the suffixes being used in Ablative sense may be removed. The figure used may be described as परिकर, the definition being. 'अलङ्कारः परिकरः साभिप्राये विशेषणे' The figure is attributed to the stanza where the adjective m[illegible] of has a specific significance.

Hi[illegible] [illegible]ation:—हे डरने वाली! [illegible] जिधर [illegible] था वह मार्ग, कहने में असमर्थ इन लताओं

ने प्रकम्पितपल्लवों वाली अपनी शाखाओं से कृपापूर्वक मु
दिखलाया था।

English Translation:—Timid one! these creeper out of compassion, (though) incapable of a clear utterance (yet) pointed out to me by means of their branches th way by which the demon (here Ravana) abducted you.

( I won also the sympathy of the female
deer of the woodland).

मृग्यश्च दर्भांकुरनिर्व्यपेक्षाः ।
तवागतिज्ञं समबोधयन्माम् ॥
व्यापारयन्त्यो दिशि दक्षिणस्याम् ।
उत्पक्ष्मराजीनि विलोचनानि ॥२५॥

Prose Order:—दर्भांकुरनिर्व्यपेक्षा मृग्यश्चोत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यस्तवागतिज्ञं मां समबोधयन् ।

मध्या—दर्भाङ्कुरनिर्व्यपेक्षा दर्भाणां कुशानामङ्कुरा अग्रभागास्तन्निर्व्यपेक्षास्तद्भक्षणेऽदत्तचित्ता मृग्यः कुरङ्ग्यश्चोत्पक्ष्मराजीनि उद्धूर्ध्वं पक्ष्मणां नेत्ररोमाणां राजयः पंक्तयो येषान्तानि विलोचनानि नेत्राणि दक्षिणस्यां दिशि व्यापारयन्त्यश्चालयन्त्यस्तवागतिज्ञं तवगतिमजानन्तं मां समबोधयन्नितोगतासीति सङ्केतितवत्यः ।

सञ्जीविनी—मृग्यश्चेति । दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षाः निस्पृहाः, मृग्यः मृगाङ्गनाश्च, उत्पक्ष्मराजीनि विलोचनानि, दक्षिणस्यां दिशि, व्यापारयन्त्यः प्रवर्त्तयन्त्यः सत्यः, तव अगतिज्ञं गत्यनभिज्ञं मां समबोधयन् दृष्टिचेष्टया त्वद्गतिमबोधयन् इत्यर्थः ।

Literary Notes :—The adjective दर्भाङ्कुर etc. shows that the मृग्यः had great regard for Rama, extended a sympathy to him to the extent that they forgot even themselves and gave up grazing.

Grammatical Notes:—दर्भाङ्कुरनिर्व्यपेक्षाः, दर्भाङ्कुर-निर्व्यपेक्षाः, दर्भस्याङ्कुरास्तन्निर्व्यपेक्षाः । तत्पु० । अगतिज्ञं गतिं जानातीति ज्ञस्तम् । न गतिज्ञोऽगतिज्ञस्तम् । व्यापारयन्त्यः is from व्यापार + णिच् । उत्पक्ष्मराजीन्युद्गताः पक्ष्मणां राजयो येषान्तानि । बहु० ।

Hindi Translation:—कुशा के अंकुरों की अपेक्षा न करते हुए हिरनियों ने नेत्रों के बालों की पंक्तियों को ऊपर उठा कर नेत्रों को दक्षिण दिशा में चलाकर, तेरी गति को न जानने वाले मुझको समझाया ।

English Translation :—Disregarding the sprouts of Kusha grass, the female deer having lifted their eyelashes and moving their eyes towards the south, gave me indications—to me—who knew not whither had you gone.

(Here the clouds showered a rain and I my tears)

एतद् गिरेर्माल्यवतः पुरस्ता-
दाविर्भवत्यम्बरलेखि शृङ्गम् ।।
नवं पयो यत्र घनैर्मया च ।
त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥२६॥

Prose Order :—एतत् माल्यवतः गिरेः अम्बरलेखि शृङ्गं पुरस्तादावि-र्भवति । यत्र घनैः नवं पयः मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ।

**मध्या**—माल्यवत एतन्नामकस्य गिरेः पर्वतस्याम्बरलेखि अम्बरं लिखतीति गगनस्पर्शि। एतदिदं शृङ्गं शिखरं पुरस्ताद् अग्र आविर्भवति प्रकटीभवति। यत्र शृङ्गे घनैर्मेघैर्नवं नवीनं पयो वृष्टिजलं मया च त्वद्विप्रयोगाश्रु तव त्वत् वा वियोगस्तस्माद् भवं तस्य वाश्रु समं सहैव विसृष्टं त्यक्तम्। वृष्टे मेघे तव स्मृत्याहमपि प्ररुदित इत्यर्थः।

**सञ्जीविनी**—एतदिति। माल्यवतः नाम गिरेः, अम्बरलेखि अभ्रङ्कषं, शृङ्गम् एतत्, पुरस्तात् अग्रे, आविर्भवति। यत्र शृङ्गे, घनैः मेघैः, नवं पयः, मया त्वद्विप्रयोगेन यत् अश्रु तच्च, समं युगपत्, विसृष्टम्। मेघदर्शनाद्वर्षतुल्यमश्रु मुक्तम् इति भावः॥

Literary Notes :—पुरस्ताद् = अग्रे or before you समं simultaneously. The figure applied here is सहोक्ति although the word सह has not been employed. A pleasurable accompaniment of another thing or object is described as the above figure. मल्लि in the conclusion puts. मेघदर्शनाद् वर्षतुल्यमश्रु मुक्तमिति भावः = At the sight of the cloud I shed my tears resembling a rain.

Grammatical Notes :—माल्यवतः। मालेव माल्यम् स्वार्थे यत्। माला + यत् (redundant) अम्बरलेखि अम्बरं लिखतीति ताच्छील्ये णिनिः। उपपदसमासः समं indeclinable विसृष्टं वि + सृज् to give out + त।

Hindi Translation:—माल्यवान् पर्वत का, आकाश को चूमने वाला यह शृङ्ग आगे दीखता है जहाँ पर मेघों ने नवीन वृष्टि और मैंने तुम्हारे वियोग से आंसू एक साथ छोड़े थे।

English Translation:—Yonder appears the sky-embracing peak of the mount Malyvat where the clouds dropped fresh torrents (of rain) and I shed my tears in our separation.

(Where the happy spectacle afforded me no pleasure).

गन्धश्च धाराहतपल्वलानाम् ।
कादम्बमर्धोद्गत-केसरञ्च ॥
स्निग्धाश्च केकाः शिखिनां बभूवुः ।
यस्मिन्नसह्यानि विना त्वया मे ॥२७॥

Prose Order:—यस्मिन् धाराहतपल्वलानां गन्धश्चार्धोद्गतकेसरञ्च कादम्बं शिखिनां स्निग्धाः केकाश्च त्वया विनामेऽसह्यानि बभूवुः ।

प्रभा—यस्मिन् माल्यवति धाराहतपल्वलानां धाराभिरासारैः (वृष्टेः) आहतास्ताडिताः पल्वलाः क्षुद्रजलाशयास्तेषां गन्धः सौरभं अर्धोद्गतकेसरमर्धमुद्गतं केसरं यस्मात्तत् कादम्बं कदम्बकुसुमं च शिखिनां शिरसि शिखावतां मयूराणां स्निग्धा मसृणा मधुराश्च केकाः वाण्यः। त्वया विना त्वत्तो विप्रयुक्तस्य मे ममासह्यानि मया सोढुमशक्यानि बभूवुः। प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनतेति भावः।

सञ्जीविनी—गन्धश्चेति। यस्मिन् शृङ्गे, धाराभिः वर्षधाराभिः आहतानां पल्वलानां गन्धश्च, अर्धोद्गतकेसरं कादम्बं नीपकुसुमञ्च, स्निग्धाः मधुराः शिखिनां बर्हिणाम्। "शिखिनौ वह्निबर्हिणौ" इत्यमरः। केकाश्च त्वया विना मे असह्यानि बभूवुः। नपुंसकमनपुंसकेनेति नपुंसकैकशेषः।

Literary Notes:—वर्ष should be supplied before धाराभिः according to मल्लि० । 'अर्धोद्गतकेसरम्'

here the adverb अर्ध is of special significance because it suggests that those कादम्बs are meant which were in half-bloom. केका is used only for the voice of peacocks.

Grammatical Notes:—आहत = beaten. आ+हन्+त। अर्धोद्गतकेसरमर्धं यथा तथोद्गतः केसरो यस्य तत् शिखिन् having crest, used of fire and peacock both. असह्यानि is neuter मल्लि० 'नपुंसकमनपुंसकेनेति नपुंसकैकशेषः। The sum and substance is that the other नपुंसक prevails where it is mixed up with the two genders. Here गन्ध is Masculine, कादम्बम् Neuter, and केका, a Feminine; hence over the other two नपुंसक prevails, therefore असह्यानि।

Hindi Translation:—जिस पर धारों के आघात खाये पल्वलों का गन्ध, अधखिला कदम्ब का फूल, और प्यारी मोरों की वाणी, तुम बिना मुझे असह्य होगई थी।

English Translation:—On which the odour arising from the ponds patted over by the torrents (of rain), the Kadamba flowers with filaments half-grown, the attractive cry of the peacoks, all these, became unbearable to me sundered from you.

(The rumblings of the clouds were borne by me with utter difficulty).

पूर्वानुभूतं स्मरता च यत्र।
कम्पोत्तरं भीरु तवोपगूढम्॥
गुहाविसारीण्यतिवाहितानि।
मया कथञ्चिद् घनगर्जितानि॥२८॥

Prose Order:—भीरु यत्र च पूर्वानुभूतं कम्पोत्तरं तवोपगूढं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चिदतिवाहितानि।

**मध्या**—भीरु भयशीले! यत्र च माल्यवति पूर्वानुभूतं पूर्वं गार्हस्थ्यसुखानुभवकालेऽनुभूतं भुक्तं कम्पोत्तरं कम्प उत्तरो यस्मिँस्तत् कम्पाधिकं कम्पानुगतं वा तव त्वया कृतं ममोपगूढमालिङ्गनं स्मरता च मया। हेतुगर्भं विशेषणम्। गुहाविसारीणि गुहासु+कन्दरासु विसरन्ति प्रसरन्तीति। घनगर्जितानि घनानां गर्जितानि मेघानां शब्दाः कथञ्चिद्। कृच्छ्रेणातिवाहितानि यापितानि। त्वां स्मृत्वा स्मृत्वा महानायासो मे दत्तस्तैर्गर्जितैरिति भावः।

सञ्जीविनी—पूर्वेति। किं च, हे भीरु! यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तव उपगूढम् उपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चित् अतिवाहितानि-स्मारकत्वेनोद्दीपकत्वात् क्लेशेन गमितानि इत्यर्थः।

Literary Notes:—मल्लि० gives कम्पप्रधानं for कम्पोत्तरं। The adjective means 'predominated by a trembling.' The same concludes 'स्मारकत्वेनोद्दीपकत्वात् क्लेशेन+गमितानीत्यर्थः'; the gist is that the rumbling cl·uds reminded Rama of his beloved and with difficulty he could pull on with them. Compare here मेघदूत—'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः। कण्ठाश्लेषप्रणयिनि जने किंपुनर्दूरसंस्थे'+=At the sight of the clouds even the mind of one enjoying matrimonial joys changes, what their would be the condition of one who is eager for embracing one's wife and is, yet, far away from her.

Grammatical Notes:—उपगूढं is from उप+गुह्+क्तः नपुंसके भावे क्तः। गुहाविसारीणि। गुहा+वि+सृ+घिनुण् (इन्) अतिवाहितानि = अति+वह्+णिच्+क्त Past Passive Participle.

Hindi Translation:—हे भीरु! जहां पर पूर्व में अनुभव किये हुए तेरे कम्पसहित आलिङ्गन को स्मरण करते हुए, मैंने गुहा में फैलने वाली बादल की गर्जनाओं को बड़ी मुश्किल से बिताया था।

English Translation:—Timid one! where recollecting those embraces of thine that were accompained by (amorous) trembling and were enjoyed by me before I could, hardly do away with the cave resounding roars of the clouds.

(The new Kandalas budding afresh imitated the charm of your eyes reddened by the smoke of the nuptial fire).

आसारसिक्तक्षितिबाष्पयोगात्।
मामक्षिणोत्तत्र विभिन्नकोशैः॥
विडम्ब्यमाना नवकन्दलैस्ते।
विवाहधूमारुणलोचनश्रीः॥२९॥

Prose Order:—तत्रासारसिक्तक्षितिबाष्पयोगाद् विभिन्नकोशैः नवकन्दलैर्विडम्ब्यमाना ते विवाहधूमारुणलोचनश्रीर्मामक्षिणोत्।

व्याख्या—तत्र माल्यवति आसारसिक्तक्षितिबाष्पयोगात्। आसारो धारासम्पातस्तेन सिक्ता क्षितिस्तस्या उत्थितो बाष्पस्तस्य योगात् सम्बन्धात् विभिन्नकोशैर्विभिन्नाः स्फुटिताः कोशा येषान्तैः कन्दलैर्विडम्ब्यमानानुक्रियमाणा ते विवाहधू-

मारुणलोचनश्रीर्विवाहार्थो धूमस्तेनारुणे ईषद्रक्ते लोचने तयोः श्रीः शोभा मामक्लिणादहिनात् । नवकन्दलंदलानि धारावृष्टिसिक्तभूमिसमुत्थितबाष्पप्रस्फुटितानि मां विवाहाग्निसमुत्थित धूमपुञ्जकलुषितारुणिताः तव दृष्टिशोभाया स्मारयन्तिस्मेति भावः ।

सञ्जीविनी—आसारेति । यत्र शृङ्गे, विभिन्नकोशैः विकसितकुड्मलैः, नवकन्दलैः कन्दलीपुष्पैःअरुणवर्णैः, आसारेण धारासम्पातेन । "धारासम्पात आसारः," इत्यमरः । सिक्तायाः क्षितेः बाष्पस्य धूमवर्णस्य, योगात् हेतोः विडम्ब्यमाना अनुक्रियमाणा, ते विवाहधूमेन अरुणा लोचनश्रीः, त्वादृश्यात् स्मर्य्यमाणा इति शेषः, माम् अक्लिणोत् अपीडयत् ॥

Literary Notes :—The figure used is स्मरणम् Remembrance. Here the vapours are comparable to smoke of the sacrificial fire sacred to the nuptial rite and the Kandalas to the eyes. The comparision is a bit recondite.

Grammatical Notes:—सिक्त=सिच्+क्तः P. P. P. विडम्ब्यमाना = वि+डम्ब्+य+मान+आ । Present Passive Particple आसारसिक्तक्षितिबाष्पयोगात् । आसारेण सिक्तायाः क्षितेर्बाष्पस्य योगात् । तत्पु० । विभिन्नकोशैः । विभिन्नाः कोशा येषां तैः । बहु० । विवाहधूमारुणलोचनश्रीः । विवाहस्य विवाहाग्नौ विवाहे वा धूमस्तेनारुणा लोचनानां श्रीः । तत्पु० ।

Hindi Translation :—[illegible]

**English Translation** :—On the same mountain, ruddy beauty of your eyes caused by the smoke the nuptial fire, being imitated by Kandala flowers abudding by a contact with the vapours arising from earth showered over by the torrential rain.

(Our eye observes the waters of the lake Pampa,

उपान्तवानीरवनोपगूढा—
न्यालक्ष्यपारिप्लवसारसानि ॥
दूरावतीर्णा पिबतीव खेदात् ।
अमूनि पम्पासलिलानि दृष्टिः ॥३०॥

Prose Order—दूरावतीर्णा दृष्टिः, उपान्तवानीरवनोपगूढानि आलक्ष्यपारिप्लवसारसानि अमूनि पम्पासलिलानि खेदात् पिबतीव ॥

**मध्या** — दूरावतीर्णा दूरात् अवतीर्णा भुवं प्राप्ता दर्शनं उपान्तवानीरवनोपगूढानि । उपान्तेषु प्रान्तेषु यानि नीराणां वेतसां वनानि तैरुपगूढानिपरिवृतानि । पारिप्लवसारसान्या ईषद् लक्ष्याः दृश्याः [illegible] सारसाः पक्षिविशेषा येषु तानि । अमून्येतानि [illegible] पम्पासम्बन्धीनि जलानि खेदात् श्रान्तत्वात् पिबतीव । दूराध्वश्रान्तः कश्चित्पान्थः पिबति तद्वदित्यर्थः ।

सञ्जीविनी—उपान्तेति । उपान्तवानीरवनोपगूढानि पार्श्वस्थवञ्जुलवनच्छन्नानि, आलक्ष्याः ईषत् दृश्याः पारिप्लवाः चञ्चलाः सारसाः येषु तानि, अमूनि पम्पासलिलानि पम्पासरोजलानि दूरात् अवतीर्णा मे दृष्टिः, अतएव खेदात पिबति इव, तृष्णातुमुत्सहते इत्यर्थः ॥

**Literary Notes** :—उपान्त etc. accounts for why the cranes could be discerned only slightly

द्वन्द्वानि दूरान्तरवर्त्तिना ते।
मया प्रिये सस्पृहमीक्षितानि ॥३१॥

Prose Order:—प्रिये अत्रावियुक्तानि ... यद
सराणि रथाङ्गनाम्नां द्वन्द्वानि ते दूरान्तरवर्त्तिना मया सस्पृहमीक्षितानि।

मध्या—प्रिये अत्र पम्पायाम्, अवियुक्तानि न ... संगतानीत्यर्थः। अन्योऽन्यदत्तोत्पलकेसराणि। अन्योऽन्यस्मै दत्तान्युत्पलकेसराणि यैः। बहु०। मिथो भोजनार्थं समर्पितकमलकन्दलिकानीत्यर्थः। रथाङ्गनाम्नां रथस्याङ्गं नाम नाम्नि येषां तेषां चक्रवाकाणां द्वन्द्वानि युगलानि ते त्वत्तो दूरान्तरवर्त्तिना दूरेऽन्तरे विप्रकृष्टदेशे पम्पायां वर्त्तते तेन। मया सस्पृहं स्पृहयेर्ष्यया सह यथा तथा ईक्षितानि सौत्सुक्यमवलोकितानीत्यर्थ। धन्यानीमान्यवियुक्तानीति॥

सञ्जीविनी—अत्रेति। अत्र पम्पासरसि, अन्योन्यस्मै दत्तोत्पलकेसराणि, अवियुक्तानि, रथाङ्गनाम्नां, द्वन्द्वानि, चक्रवाकमिथुनानि, ते तव दूरान्तरवर्त्तिना दूरदेशवर्त्तिना मया, हे प्रिये! सस्पृहं साभिलाषम् ईक्षितानि तदानीं त्वामस्मार्षम् इत्यर्थः।

Literary Notes:—मल्लि० concludes with तदानीं त्वामस्मार्षमिति भावः He means that the pairs of the चक्रवाकs reminded him of their own happy days of conjugal life, in contrast to his present separation from Sita. Thus मल्लि० has supplied the purport sumptuously. We would add that just as the husband and the wife offer delicious eatables to each other and just as the one relents to take any thing exclusively apart from the other, in the same way be-

मध्या—इमाञ्च प्रत्यक्षां स्तनाभिरामस्तवकाभिनम्राम्। स्तनौ गुच्छकस्थानीयावत एव लताभ्रान्तिः। तन्वीं कोमलां तटाशोकलता तटेऽशोकस्य लता तटस्थामशोकलतामित्यर्थः। त्वत्प्राप्तिबुद्ध्या त्वामेवान्विष्यता मया प्राप्तेति मत्वेत्यर्थः। परिरब्धुकामः परिरब्धुं कामो यस्य सः। बहु०। आलिङ्गितुमुत्कण्ठित इत्यर्थः। साश्रुरश्रुभिर्नेत्रजलैः सह विद्यमानः। अहं निषिद्धो निराकृतः। नेयं सीता लतेयमिति कथयित्वेत्यर्थः। अनेन त्वद्वियोगे महती मे भ्रान्तिः समुत्पन्नेत्यर्थः।

सञ्जीविनी—इमामिति। किं च, स्तनवत् अभिरामाभ्यां स्तवकाभ्याम् अभिनम्रां तन्वीम्, इमां तटाशोकलताम्, अतः त्वत्प्राप्तिबुद्ध्या त्वमेव प्राप्तेति भ्रान्त्या, परिरब्धुम् आलिङ्गितुं कामः यस्य सः अहं, सौमित्रिणा लक्ष्मणेन, साश्रु निषिद्धः, नेयं सीतेति निवारितः। परिरब्धुकाम-इत्यत्र "तुङ्काममनसोरपि" इति वचनात् मकारलोपः॥

Literary Notes:—The figure used here is called भ्रान्तिमान् or Delusion. It consists in one's mistaking a certain object for another. The basis of the figure is a close affinity between the objects of comparison; the tender creeper was mistaken for सीता, the bunches for the breasts, and the tenderness also supplied a ground for the delusion.

Grammatical Notes:—तटाशोकलता तटेऽशोकस्य लता तत्पु०। स्तनाभिरामस्तवकाभिनम्राम् स्तनाविवाभिरामौ स्तवकौ ताभ्यामभिनम्राम्। तत्पु०। त्वत्प्राप्तिबुद्ध्या त्वत्प्राप्तिरूपया बुद्ध्या। तत्पु०। परिरब्धुकामः। परिरब्धुं कामो यस्य सः। बहु०। the म् of the infinitive affix तुम्

सपङ्क्तयः गोदावर्यास्तीरे स्थिताः सारसानां पंक्तयस्त्वां प्रत्युद्व्रजन्तीव तव स्वागतमिव ददतोत्यर्थः ।

सञ्जीविनी—अमूरिति । विमानस्य अन्तरेषु अवकाशेषु लम्बन्ते याः तासां, काञ्चनकिङ्किणीनां स्वनं श्रुत्वा, स्वयूथशब्दभ्रमात् खम् आकाशम्, उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्ति इव ॥

Literary Notes :—अन्तरेषु means according to मल्लि० अवकाशेषु = botween gaps. Tho same, after स्वनं श्रुत्वा, puts : स्वयूथशब्दभ्रमात्=mistaking it for the sound of their own flocks.

Grammatical Notes:—विमानान्तरलम्बिनीनां विमानस्यान्तरेषु लम्बन्ते तासाम् । ताच्छील्ये णिनिः । काञ्चनकिङ्किणीनाम् काञ्चनस्येमाः काञ्चन्यः। ताश्च ताः किङ्किण्यस्तासाम् । कर्मधा० । गोदावरीसारसपंक्तयः । गोदावर्याः सारसानां पङ्क्तयः ।

Hindi Translation:—विमान के बीच में लटकती हुई सोने की घण्टियों की झनकार को सुन कर ऊपर उड़ती हुई ये गोदावरी तटस्थित सारसों की पंक्तियां तुम्हारा स्वागत सा करती हैं।

English Translation :—Those flocks of the cranes on the banks of the Godavari river rise up having heard the twinkling sound of the golden bells fixed in the gaps of this airy car. Methinks they do so by way of a welcome to you.

(This Panchavati, seen by me after a long time, delights me).

एषा त्वया पेशलमध्ययापि ।
घटाम्बुसंवर्धितबालचूता ॥

indeed the proposed innovation would involve the blemish called अश्लील as is said somewhere: पेलवशब्दस्याद्याक्षरेऽश्लीले ।

Grammatical Notes:—For compounds see मध्या above. कृष्णसारः कृष्णेन सारः according to Brahmachari's edition तृतीयेति समासः

Hindi Translation:—कमर पतली होने पर भी तुम से घड़ों से जल दे दे कर बढ़ाये गये हैं आम के छोटे २ पौधे जिसमें वह उन्नत मुखवाले विचित्र हिरनी से युक्त चिरकाल के पश्चात् देखी गई यह पञ्चवटी मुझे आनन्द देती है ।

English Translation:—This Panchavati, seen since very long with dappled deer with their faces raised heaven-ward, and with its tender mango plants nourished by your watering them with water in jugs although you are too tender-waisted (for the task), delights my mind.

(Here fatigued by a hunt I slept in your lap).

अत्रानुगोदं मृगयानिवृत्तः ।
तरङ्गवातेन विनीतखेदः ॥
रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा ।
स्मरामि वानीरगृहेषु सुप्तः ॥३५॥

Prose Order:—अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदो वानीरगृहेषु रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा सुप्तः (इति) स्मरामि ॥

व्याख्या—अत्र पञ्चवट्यामनुगोदं गोदायाः समीपे आखेटकात् निवृत्तः प्रत्यागतः तरङ्गवातेन तरङ्गैः संपृक्तो यो वातस्तेन तरङ्गमरुता पवनेन विनीतखेदो विनीतोऽपहृतः (खेदो श्रमो यस्य सः । वानीरगृहेषु वानीराणां वेतसानां गृहेष्विव गृहाणि

वानीरकुञ्जेष्वित्यर्थः त्वदुत्सङ्गनिषण्णमूर्धा तवोत्सङ्गेऽङ्के निषण्ण निविष्टो मूर्धा मस्तको यस्य सः एतेन विस्रम्भातिशयो ध्वनितः तथाभूतः सन् सुप्तोऽहमिति स्मरामि । प्रत्यक्षमिव तदखिलं रहस्यवृत्तं मम प्रतिभाति ।

सञ्जीविनी—अत्रेति । अत्र पञ्चवट्यां, गोदा गोदावरी तस्याः समीपे अनुगोदम् । अनुर्यत्समयेत्यव्ययीभावः । मृगयायाः निवृत्तः, तरङ्गवातेन विनीतखेदः, रहो रहसि अत्यन्तसंयोगे द्वितीया । त्वदुत्सङ्गनिषण्णमूर्द्धा सन्, अहं, वानीरगृहेषु सुप्तः स्मरामि । वाक्यार्थः कर्म्म । सुप्त इति यत् तत् स्मरामि इत्यर्थः ॥

Literary Notes :—The word अनुगोदं is suggestive of the idea that the place of their confidential sittings was cool and shady. त्वदुत्सङ्ग etc., likewise suggests that there was a perfect accord and complete confidence between Sita and Rama.

Grammatical Notes :—अनुगोदं = गोदायाः समीपे । गोदा = गोदावरी । नामग्रहणे नामैकदेशग्रहणम् । Even the part of name can be used for the whole. अनुर्यत्समया । The word अनु is compounded in the sense of approximity. The compound is Avyayi Bhāva. मृगयानिवृत्तो मृगयाया निवृत्तः । तरङ्गवातेन विनीतखेदः; see मध्याः above. रहस्=in secrecy, in privacy मल्लि० adds 'अत्यन्तसंयोगे द्वितीया (in रहस्) The second class (द्वितीयाविभक्ति) is used where the sense of a close approximity is intended.

be conveyed. In the conclusion मल्लि० includes fine remarks on the syntax of the closing half of the stanza. Says he: 'वाक्यार्थः कर्म। सुप्त इति यत्तत् स्मरामीत्यर्थः। The sum and substance is that the purport of the sentence here is the object of the verb स्मरामि।

Hindi Translation:—यहाँ गोदावरी के निकट शिकार से लौट कर, तरङ्गों की हवासे थकावट दूर कर, एकान्त में तेरी गोद में शिर रख कर वेत के कुञ्जों में सोया था, यह मुझे याद है।

English Translation.—I remember that I slept in peace placing my head in your lap, here near the Godavari in the canny bower, and also that my fatigue disappeared.

(This is the hermitage of Nahusha).

भ्रूभेदमात्रेण पदान्मघोनः।
प्रभ्रंशयां यो नहुषं चकार॥
तस्याविलाम्भःपरिशुद्धिहेतोः।
भौमो मुनेः स्थानपरिग्रहोऽयम्॥३६॥

Prose Order:—यो भ्रूभेदमात्रेण नहुषं मघोनः पदात् प्रभ्रंशयांचकाराविलम्भःपरिशुद्धिहेतोः तस्य मुनेः भौमोऽयं स्थानपरिग्रहः।

मल्ल्या—योऽगस्त्यो भ्रूभेदमात्रेण भ्रुवोर्भेदो भङ्गस्तन्मात्रेण तावतैव नान्येन शापादिना नहुषं राजानं मघोनः पदात् स्थानात्। इन्द्रासनात् प्रभ्रंशयाञ्चकार तस्याविलाम्भःपरिशुद्धिहेतोराविलञ्च तदम्भो मलिनं जलं तस्य परिशुद्धेः पावित्र्यस्य हेतोः कारणस्यागस्त्यस्य मुने भौमः पार्थिवः पृथिव्यां स्थितः वायं स्थानपरिग्रहः स्थानमेव परिग्रह आश्रमपदमिदमिति भाव

In the end मल्लि० adds; दृश्यते = is seen, hermitage). He further suggests that the adjective भौम indicates that there is also a celestial place of अगस्त्य in addition to this terrestrial one.

Grammatical Notes :—भ्रूभेदमात्रेण = भ्रुवो भेद एव तेन। मघोनः genitive singular of मघवन्. A peculiarity of Kalidāsa is to be noticed here, viz. that he has separated the Verbal form प्रभ्रंशयां· from its adjacent part चकार which is arbitrary to the current grammatical norm. आविलाम्भःपरिशुद्धिहेतोराविलं च तदम्भः कर्मधा० तस्य परिशुद्धेर्हेतोः। तत्पु०। भौमः भूम्यां भवः। भूमि+अण्। स्थानपरिग्रहः। मल्लि० here gives excellent grammatical notes : परिगृह्यते इति परिग्रहः। This can be derived from परि+ग्रह्+अप्. Then स्थानमेव परिग्रहः।

Hindi Translation:—जिसने भौंह की मरोड़ मात्र से नहुप को इन्द्र के पद से गिरा दिया, अपवित्र जल की शुद्धि कर देने वाले उन (अगस्त्य) मुनि का यह भूमिस्थित आश्रम है।

**English Translation.**—This is the terrestrial abode of that sage who with a frown only put मघवन् out of the position of Indra and who is the cause of the purification of the dirty waters.

(I became light-hearted at inhaling the fragrance put forth by the sacrificial smoke.)

त्रेताग्निधूमाग्रमनिन्द्यकीर्त्तेः।
तस्येदमाक्रान्तविमानमार्गम् ॥

स्वार्थे तल् । पृषोदरादित्वादेत्वम् । The तल् is rednnd
एवं त्रे from त्रि is an irregular formation.
रजसा विमुक्तः । 'रजोगुणात् विमुक्तः' says मल्लिनाथ।
this expoundation is somewhat stretched out;
that proposed by us is simple and straight-for
ward.

Hindi Translation :—प्रशंसनीय यशवाले
(अगस्त्य की) विमानमार्ग से भिड़ने वाली हवियों की गन्ध से
सुगन्धित इस अग्नित्रय के धूमों की शिखा को सूंघ कर मेरा
नीरज आत्मा हलका होगया है ।

English Translation:—My soul—free from रजस्
attains to lightness having taken a smell of the tops of
the trio of the (sacred) fires—the top which has a frag-
rance of the oblations (mixed up) and which has obstruct-
ed the passage of the aerial car. (The above fires are
maintained) by that (sage) of praiseworthy fame.

*(This pleasure-pond of Satakarni surrounded by dense woods looks like the lunar disk overclouded).*

**एतन्मुनेर्मानिनि शातकर्णेः ।**
**पञ्चाप्सरो नाम विहारवारि ॥**
**आभाति पर्यन्तवनं विदूरात् ।**
**मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥३८॥**

Prose Order:—हे मानिनि ! एतच्छातकर्णेर्मुनेः पञ्चाप्सरो नाम पर्यन्तवनं विहारवारि विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बमाभाति ॥

that according to some writers, it is a merit give such Adjectives as विहार to such Noun: वारि। Compare his क्रीडाखरो हेमाङ्गदादयः'।

Hindi Translation—हे मानवति! यह मुनि का वनों से परिवेष्टित, पञ्चाप्सर नामक क्रीडा-सरोवर जो कि दूर से मेघों के मध्यस्थित कुछ २ दिखलाई देने चन्द्रमण्डल के सदृश प्रतीत होता है।

English Translation.— O Self-respecting one! T is the pleasure-pond of शातकर्णि surrounded by forests called पञ्चाप्सरस्. This is indistinctly visible like the l disk among the clouds.

(The same sage fell into the net of the beauty of the five nymphs.)

पुरा स दर्भाङ्कुरमात्रवृत्तिः।
चरन्मृगैः सार्धमृषिर्मघोना॥
समाधिभीतेन किलोपनीतः।
पञ्चाप्सरोयौवनकूटबन्धम्॥३६॥

Prose Order—पुरा दर्भाङ्कुरमात्रवृत्तिर्मृगैः सार्धं चरन् स ऋषिः समाधिभीतेन मघोना पञ्चाप्सरोयौवनकूटबन्धं नीतः॥

मध्या—पुरा पूर्वं।मृदर्भाङ्कुरमात्रवृत्तिर्दर्भस्य कुशस्याङ्कुरा अग्रभागा एवेति दर्भाङ्कुरमात्रं तद् वृत्तिर्यस्य सः। कुशाङ्कुरमात्रेण जीवनं वर्त्तयन्। मृगैर्हरिणैः सार्धं चरन् कुशां कवलयन् स शातकर्णिर्नाम ऋषिः समाधिभीतेन समाधियोगसाधनं तस्माद् भीतेन तपःसिद्धोऽयं मामिन्द्रासना

Grammatical Notes:— 'पुरा'; indeclinable the sense of 'once'. दर्भाङ्कुरमात्रवृत्तिः। For poundation, consult मघ्या above. मघोना sho be declined in all the cases. समाधिभीतेन समा भीतस्तेन । पञ्चमीतत्पु० । 'पञ्चमी भये' इति पञ्चमी समाधि is from सम्+आ+धा+किः। उपसर्गे घोः कि The roots दा and धा take किः to form a no from them provided they have some prepo prefixed to them. The one peculiarity of th derivates from this कि is that they all are M line of gender, though apparently they look lik the Feminine nouns in इ। यौवनम् is from युवन्+ अण् । यूनो भावो यौवनम् । हायनान्तयुवादिभ्योऽणिति प्रत्ययः। ऐकहायनः means a yearling.

Hindi Translation:—पूर्व, कुश के अङ्कुरों मात्र से अपना निर्वाह करने वाला, मृगों के साथ चरता हुआ वह ऋषि, समाधि से डरे हुए इन्द्र से पाँच अप्सराओं के यौवन के जाल में फाँस लिया।

English Translation.—*In times gone by, that sage living exclusively upon the sprouts of Kusa grass in the company of the deer that wandered and grazed (about) fell into the deceiving snares of the youth of the five nymphs set upon (him) by Indra terrified by his meditations.*

*(The sound of the tabor of this sage is caught and re-echoed by the top-chambers of the Puspaka).*

Grammatical Notes:— 'पुरा'; indeclinable the sense of 'once'. दर्भाङ्कुरमात्रवृत्तिः। For poundation, consult मघ्या above. मघोना s' be declined in all the cases. समाधिभीतेन भीतस्तेन । पञ्चमीतत्पु० । 'पञ्चमी भये' इति पञ्चमी समाधि is from सम्+आ+धा+किः। उपसर्गे घोः कि The roots दा and धा take किः to form a ... from them provided they have some preposition prefixed to them. The one peculiarity of th derivates from this कि is that they all are Masc line of gender, though apparently they look lik the Feminine nouns in इ। यौवनम् is from युवन्+ अण् । यूनो भावो यौवनम् । हायनान्तयुवादिभ्योऽणि प्रत्ययः। ऐकहायनः means a yearling.

Hindi Translation:—पूर्व, कुश के अङ्कुरों मात्र अपना निर्वाह करने वाला, मृगों के साथ चरता हुआ वह ऋषि समाधि से डरे हुए इन्द्र से पाँच अप्सराओं के यौवन के जाल फाँस लिया।

English Translation.—In times gone by, that sag living exclusively upon the sprouts of Kusa grass in th company of the deer that wandered and grazed (about fell into the deceiving snares of the youth of the fiv nymphs set upon (him) by Indra terrified by his med tations.

(The sound of the tabor of this sage is caught
and re-echoed by the top-chambers
of the Puspaka).

Such ungrammatical proposals really excite wonder and laughter. The same gives णिच to भज् to arrive at the form भाज् which is preparderatingly wrong. भजो ण्विः is actually the aphorism and the real affix is ण्विः Then again the same author perceives प्रसक्त from प्र + सज् which likewise is entirely inadmissible. We also cannot understand what is the use of dragging in the उणादि अङ्गच् to get the word मृदङ्ग and not derive it from plain मृद् + अङ्गः ।

Hindi Translation:—शुभ्र महल में विराजमान उन शातकर्णि के होते हुए संगीत के मृदङ्ग की ध्वनि आकाश में पहुँच कर पुष्पक की अटारियों को क्षणभर के लिये प्रतिध्वनित कर रही है ।

English Translation:—The sound of the tabor of the musical concert held in the submerine palace of that sage, rises high up to the heavens and reverbrates the top-chambers of Pushpaka, though for a moment only.

(There another sage, Sutikshna by name is practising austerities)

हविर्भुजामेधवतां चतुर्णाम् ।
मध्ये ललाटन्तपसप्तसप्तिः ॥
असौ तपस्यत्यपरस्तपस्वी ।
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥२१॥

Prose Order:—नाम्ना सुतीक्ष्णश्चरितेन दान्तोऽसावपरस्तपस्वी एधवतां चतुर्णां हविर्भुजां मध्ये ललाटन्तपसप्तसप्तिः तपस्यति ॥

concert = here is लोक विरुद्धं or शास्त्र-विरुद्धम्, because both these latter do not warrant the of such pastimes for the sages and those that practise penance and are engaged in austerities. It is clear that the sage described here had fallen into the net of the youthful charms of the five nymphs and had been beguiled from his path. Hence no blemishes above referred to can be found in this stanza.

मल्लि quotes. "चन्द्रशाला शिरोगृहम्", and "प्रतिश्रुत् प्रतिध्वाने" इत्यमरः । both repectively mean चन्द्रशाला is a top-house, and प्रतिश्रुत्, Feminine stands for echo. By the way, it may be pointed out that the word सौध is Masculine and Feminine both.

*Grammatical Notes:*—अन्तर्हित = अन्तर् + धा + क्त Past Active Participle. सौध = सुधा + अण् सुधा is a white-wash. भाज् is from भज् + ण्वि भजे ण्विः । प्रगल्भ = प्र + गल्भ् अच् । Active, प्रतिश्रुत् = प्रति + श्रु + क्विप् । इतो बाहुलकात् धातो ... क्विप् *The derivation proposed by Brahmachary is quite childish and unPaniniya. He gives ... adopting which the form would have been ... instead of प्रतिश्रुत्, and which would have ... flaw as in that case there would be one syllable too many in the last ...*

Such ungrammatical proposals really excite wonder and laughter. The same gives णिच to भज् to arrive at the form भाज् which is preparderatingly wrong. भजो ण्विः is actually the aphorism and the real affix is ण्विः Then again the same author perceives प्रसक्त from प्र + सज् which likewise is entirely inadmissible. We also cannot understand what is the use of dragging in the उणादि अङ्गच् to get the word मृदङ्ग and not derive it from plain मृद् + अङ्गः ।

Hindi Translation:—शुभ्र महल में विराजमान उन शातकर्णि के होते हुए संगीत के मृदङ्ग की ध्वनि आकाश में पहुँच कर पुष्पक की अटारियों को क्षणभर के लिये प्रतिध्वनित कर रही है ।

English Translation:—The sound of the tabor of the musical concert held in the submerine palace of that sage, rises high up to the heavens and reverbrates the top-chambers of Pushpaka, though for a moment only.

(There another sage, Sutikshna by name is practising austerities)

हविर्भुजामेधवतां चतुर्णाम् ।
मध्ये ललाटन्तपसप्तसप्तिः ॥
असौ तपस्यत्यपरस्तपस्वी ।
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥२१॥

Prose Order:—नाम्ना सुतीक्ष्णश्चरितेन दान्तोऽसौ एधवतां चतुर्णां हविर्भुजां मध्ये ललाटन्तपसप्तसप्तिः तपस्यति ॥

मध्या—नाम्ना सुतीक्ष्णः सुतीक्ष्णनामकश्चरितेनाचारेण दान्त इन्द्रियविजयी। असावयमपरस्तपस्वी तापसः एधवतामिध्मप्रदीपितानां चतुर्णां हविर्भुजामग्नीनां मध्ये ललाटन्तपः सप्तसप्तिः। ललाटन्तपतीति ललाटन्तपः मूर्ध्नस्तापकः। अत्युग्र इति यावत्। सप्तसप्तिः सप्त सप्तयोऽश्वा यस्य स सूर्यो यस्य स सुतीक्ष्णस्तपस्यति तपश्चर्यां चरति।

सञ्जीविनी—हविरिति! नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा, चरितेन दान्तः सौम्यः, असौ अपरः तपस्वी एधवताम् इन्धनवताम्। "काष्ठं दार्विन्धनं त्वेधः" इत्यमरः। चतुर्णां हविर्भुजाम् अग्नीनां मध्ये, ललाटं तपतीति ललाटन्तपः सूर्य्यः। असूर्य्यललाटयोर्दृशितपोरिति खश् प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः। ललाटन्तपः सन्, तपस्यति तपश्चरति। कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ्, तपसः परस्मैपदश्चेति वक्तव्यम्॥

Literary Notes:— दान्तः is one who has a full control over his sense-organs. The penance described here is technically called पञ्चाग्नि in which five fires are used. The fires are kindled and regularly maintained upon the hearth and burn around the practitioner and the sun becomes the fifth one. माघ has rightly pointed out: 'तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते। पञ्चमः पञ्चतपसस्तपनो जातवेदसाम्='the powerful one, although farther, is counted among the mighties. The sun becomes the fifth fire for one who practises a 'Five-fire' penance.'

word अर्धं means an equal half part and is used in neuter gender. Says मल्लि० 'पुंस्यर्धोऽर्धं समेंऽशके' । मल्लि० supplies बभूवुः after अलं समर्थानि ।

Grammatical Notes:—जनितेन्द्रशङ्कम् । जनितेन्द्रस्य शङ्का येन तम् । बहु० । प्रहित = प्र + धा + कः । विभ्रम=वि + भ्रम + अः । घञर्थे कविधानम् । The derivation proposed by Brahmachāri is absolutely wrong. He gives affix घञ् ।

English Translation.—The amorous plays of the damsels of the Gods, the glances sent with craft, these all things could not disturb this sage who freightened Indra.

Hindi Translation:—हासहित चलाई हुई आंखों वाली, कपट से कुछ २ दिखाई गई हैं मेखला जिन्हों ने ऐसी, अप्सराओं की विलास-चेष्टायें, इन्द्र को भयभीत करने वाले इस (सुतीक्ष्ण) को बिगाड़ न सकीं ।

(He lifts his right hand in order to
accord us a welcome.)

एषोऽक्षमालावलयं मृगाणाम् ।
कण्डूयितारं कुशसूचिलावम् ॥
[illegible]जने मे भुजमूर्ध्वबाहुः ।
[illegible]तरं प्राध्वमितः प्रयुङ्क्ते ॥४३॥

Order:—[illegible]

[illegible]

word अर्धं means an equal half part and is used in neuter gender. Says मल्लि० 'पुंस्यर्धोऽर्धं समेंऽशके' । मल्लि० supplies बभूवुः after अलं समर्थानि ।

Grammatical Notes:—जनितेन्द्रशङ्कम् । जनितेन्द्रस्य शङ्का येन तम् । बहु० । प्रहित = प्र + धा + क्तः । विभ्रम=वि + भ्रम + अः । बन्धयें कविधानम् । The derivation proposed by Brahmachāri is absolutely wrong. He gives affix घञ् ।

English Translation.—The amorous plays of the damsels of the Gods, the glances sent ,with craft, these all things could not disturb this sage who freightened Indra.

Hindi Translation:—हाससहित चलाई हुई आँखों वाली, कपट से कुछ २ दिखाई गई हैं मेखला जिन्हों ने ऐसी, अप्सराओं की विलास-चेष्टायें, इन्द्र को भयभीत करने वाले इस (सुतीक्ष्ण) को बिगाड़ न सकीं ।

—— (He lifts his right hand in order to accord us a welcome.)

एषोऽक्षमालावलयं मृगाणाम् ।
कण्डूयितारं कुशसूचिलावम् ॥
सभाजने मे भुजमूर्ध्वबाहुः ।
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥४३॥

Prose Order:—इत ऊर्ध्वबाहुरेषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावं सव्येतरं भुजं मे सभाजने प्राध्वं प्रयुङ्क्ते ॥

व्याख्या —इतोऽस्मिन्नन्यतमप्रदेशे ऊर्ध्वबाहुरूर्ध्वौ बाहू यस्य सः । भुजावूर्ध्वौ कृत्वा तपस्यन्, एष सुतीक्ष्णः । अक्षमालाव-

